# ॥ शुक्र ग्रह मंत्र, जप, कवच, स्तोत्र ॥

## अनुक्रमाणिका



## शुक्र यन्त्रम्

रुद्रांग विश्वा रविदिग्गजाख्या
नगामनुश्चांकक्रमाद्विलेख्याः ।
भृगोः कृतारिष्ट विनाशनाय
धार्यं हि यन्त्रं मुनिना प्रकीर्तितम् ॥

| | | |
|---|---|---|
| ११ | ६ | १३ |
| १२ | १० | ८ |
| ७ | १४ | ९ |

# ॥ शुक्र देव ग्रह ॥

शुक्र भोजकर्कट देश में उत्पत्ति। भार्गव गोत्र। जाति ब्राह्मण। दैत्य गुरु। संजीवनी विद्या ज्ञाता। इन्हीं के वंश में जामदग्नेय पुत्र परशुराम का अवतार हुआ था।

- **शुभाशुभत्व** — **शुभ ग्रह**
- **भोग काल** — **30 दिन (एक मास)**
- **बीज मंत्र** — **ॐ शुं शुक्राय नमः।** सप्ताक्षरी मन्त्र
  - **ॐ शुं शुक्राय नमः स्वाहा।** नवाक्षरी मन्त्र
  - **ॐ ह्रीं श्रीं शुक्राय नमः।**
  - **ॐ शुक्राय नमः।**
- **तांत्रिक मंत्र** — **ॐ द्राँ द्रीं द्रौं सः शुक्राय नमः।**
  - **ॐ ऐं जं गे ग्रहेश्वराय शुक्राय नमः।** आगमशिरोमणौ
- **वैदिक मंत्र** — **ॐ अन्नात्परिस्त्रुतो रसं ब्रम्हणा व्यपिवत्क्षत्रं पयः सोमं प्रजापतिः।**
  **ऋतेन सत्यमिन्द्रियँ विपानऽ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु॥**
- **पुराणोक्त मंत्र** — **ॐ हिमकुन्द मृणालाभं दैत्यानां परमं गुरुम।**
  **सर्वशास्त्र प्रवक्तारं भार्गवं प्रणमाम्यहम॥**
- अधिदेवता- इन्द्रम् — **ॐ सयोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्राहा शूर विद्वान्।**
  **जहिशत्रूं रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः॥**
- प्रत्यधिदेवता-इन्द्राणीम् — **ॐ अदित्यै रास्नासीन्द्राण्याऽ उष्णीषः। पूषासि धर्माय दीष्वः॥**
- **जप संख्या** — **16,000 कलयुगे चतुर्थगुणो अर्थात 64,000**
  **+ दशांश हवन 6,400**
  **+ दशांश तर्पण 640**
  **+ दशांश मार्जन 64 = 71,104**
- **जप समय** — **ब्रह्मवेला (सुर्योदय)**
- **हवनवस्तु** — **गूलर**
- **रत्न** — **हीरा - 1 रत्ती, शुक्रवार, पूर्व दिशा, प्रातःकाल, तर्जनी**

- **शुक्र प्रार्थना**

**श्वेताम्बरः श्वेतवपुः किरीटी, चतुर्भुजो दैत्यगुरुः प्रशान्तः ।**
**तथाक्षसूत्रञ्च कमण्डलुञ्च, दण्डञ्च विभ्रद्वरदोऽस्तु मह्यम् ॥**

- जो श्वेत वस्त्र धारण करने वाले, श्वेत विग्रह वाले, मुकुट धारण करने वाले, चार भुजा वाले, शान्त स्वरूप, अक्षसूत्र, कमण्डलु तथा जयमुद्रा धारण करनेवाले हैं, वे दैत्यगुरु शुक्राचार्य मेरे लिये वरदायी हों।

- **शुक्र का व्रत**

३१ या २१ शुक्रवारों तक करना चाहिये। श्वेत वस्त्र धारण करके **'ॐ द्रां द्रीं द्रौं सः। शुक्राय नमः '** इस मन्त्र का २१, ११ या ५ माला जप करे। भोजन में चावल, चीनी, दूध, दही और घी से बने पदार्थ भोजन करे। इस व्रत के करने से सुख-सौभाग्य और ऐश्वर्य की वृद्धि होती है।

- **अनिष्टे शुक्रे शान्ति स्नानम्**

- **नाशष्बरैलाफलमूलकुंकुमैः, सपुण्डरीकैः शिलया समन्वितैः ।**
**कवीरितानिष्ट विधात हेतवे, स्नायादनब्जैरिति कश्चिदाह वा ॥**
- शुक्र की अनिष्ट-शान्ति के लिये श्वेत कमल, मनः शिल, सुगन्धबाला, इलायची, पोहकरमूल और केशर से स्नान करना चाहिये।

- **शुक्र दान**

**चित्रवस्त्रमपि दानवार्चिते, दुष्टगे मुनिवरैः प्रणोदितम् ।**
**तण्डुलं घृतसुवर्णरूप्यकं, वज्रकं परिमलो धवला गौः ॥**

- **चित्राम्बरं शुभ्रतुरंगमश्च धेनुश्च वज्रं रजतं सुवर्णम् ।**
**सुतंडुलानुत्तमगंधयुक्तान् वदंति दानं भृगुनन्दनाय ॥**
- चित्रित सुन्दर वस्त्र, चावल, घी, स्वर्ण, धन, हीरा, सुगन्धित दिव्य पदार्थ तथा श्रृंगार-सामग्री एवं सवत्सा श्वेत गौ [स्फटिक, कपूर, शर्करा, मिश्री एवं दही इत्यादि]-का दान करना चाहिये। चाँदी, नमक, सफेद पुष्प,
- शुक्र ग्रह का दोष निवारण करने हेतु श्वेत अश्व एवं श्वेत वस्त्र का दान करना चाहिये।

# ॥ शुक्र वैदिक मंत्र न्यासादि प्रयोगः ॥

- **वैदिक मंत्र** — **ॐ अन्नात्परिस्त्रुतो रसं ब्रम्हणा व्यपिवत्क्षत्रं पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियँ विपानऽ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥**

- **विनियोग** — ॐ अन्नात्परिस्त्रुत इति मन्त्रस्य पराशर ऋषिः । शक्वरी छन्दः । शुक्रो देवता । रसं ब्रह्मणा इति बीजम् । शुक्र प्रीत्यर्थे जपे विनियोगः: ।

- **ऋष्यादि न्यास** — ॐ पराशर ऋषये नमः शिरसि । ॐ शक्वरी छन्दसे नमः मुखे । ॐ शुक्र देवतायै नमः हृदये । ॐ रसं ब्रह्मणा इति बीजाय नमः गुह्ये । विनियोगाय नमः सर्वाङ्गे ॥

- **करन्यासः-** — ॐ अन्नात्परिस्त्रुत इत्यङ्गुष्ठाभ्यां नमः । ॐ रसं ब्रह्मण व्यपिबत् इति तर्जनीभ्यां नमः । ॐ क्षत्रंपय इति मध्यमाभ्यां नमः । ॐ सोमं प्रजापतिरित्यनामिकाभ्यां नमः । ॐ ऋतेनसत्यमिंद्रियंव्विपानर्ठ. शुक्रमंधसः कनिष्ठिकाभ्यां नमः । ॐ इंद्रस्येंद्रियमिदंपयोमृतंमधु इति करतलकर पृष्ठाभ्यां नमः ॥

- **हृदयादि न्यास** — ॐ अन्नात्परिस्त्रुतो हृदयाय नमः । ॐ रसं ब्रह्मणा व्यपिबत् शिरसे स्वाहा । ॐ क्षत्रंपयः शिखायै वषट् । ॐ सोमं प्रजापतिरिति कवचाय हुं । ॐ ऋतेनसत्यमिंद्रियंव्विपानर्ठ. शुक्रमंधसो नेत्रत्रयाय वौषट् । ॐ इन्द्रस्येंद्रियमिदंपयोमृतम्मधु इत्यस्त्राय फट ॥

- **मन्त्रन्यास** — ॐ अन्नात्परिस्त्रुत इति शिरसि । ॐ रसं ब्रह्मणा ललाटे । ॐ व्यपिबत्क्षत्रं मुखे। ॐ पयः सोमं हृदये । ॐ प्रजापतिर्नाभौ । ॐ ऋतेनसत्यं कट्याम् । ॐ इंद्रियंविपानम् गुदे । ॐ शुक्रं वृषणयोः । ॐ अन्धस ऊर्वोः । ॐ इन्द्रस्येंद्रियमिदम्पयो जानुनोः । ॐ अमृतं पादयोः । ॐ मधु सर्वशरीरे च ।

# ॥ शुक्र कवचम् ॥

- **विनियोग** अस्य श्री शुक्र कवच स्तोत्र मन्त्रस्य । भारद्वाज ऋषि: । अनुष्टुप छन्द: । शुक्रो देवता । शुक्रप्रीत्यर्थे पाठे विनियोगः ।
- **ऋष्यादिन्यास:** शिरसि भारद्वाज ऋषये नम: । मुखे अनुष्टुप छन्दसे नम: । हृदि श्री शुक्र देवतायै नमः । सर्वांग श्री शुक्र प्रीत्यर्थे पाठे विनियोगः ।

- **मृणालकुन्देन्दुपयोजसुप्रभं पीताम्बरं प्रभृतमक्षमालिनम् ।**
  **समस्तशास्त्रार्थनिधिं महांतं ध्यायेत्कविं वान्छितमर्थसिद्धये ॥** ॥ १ ॥

- **ॐ शिरो मे भार्गव: पातु भालं पातु ग्रहाधिप: ।**
  **नेत्रे दैत्यबृहस्पति: पातु श्रोतो मे चन्दनद्युति: ॥** ॥ २ ॥

- **पातु मे नासिकां काव्यो वदनं दैत्यवन्दित: ।**
  **वचनं चोशना: पातु कण्ठं श्रीकण्ठभक्तिमान् ॥** ॥ ३ ॥

- **भुजौ तेजोनिधि: पातु कुक्षिं पातु मनोव्रज: ।**
  **नाभिं भृगुसुत: पातु मध्यं पातु महीप्रिय: ॥** ॥ ४ ॥

- **कटिं मे पातु विश्वात्मा उरू मे सुरपूजित: ।**
  **जानु जाड्यहर: पातु जंघे ज्ञानवतां वर: ॥** ॥ ५ ॥

- **गुल्फो गुणनिधि: पातु पादौ वराम्बर: ।**
  **सर्वाण्यंगानि मे पातु स्वर्णमालापरिष्कृत: ॥** ॥ ६ ॥

- **य इदं कवचं दिव्यं पठति श्रद्धयान्वित: ।**
  **न तस्य जायते पीड़ा भार्गवस्य प्रसादत: ॥** ॥ ७ ॥

॥ इति श्रीब्रह्माण्डपुराणे श्री शुक्र कवच स्तोत्रम् सम्पूर्णम् ॥

# ॥ शुक्र स्तोत्रम् - १ ॥

- नमस्ते भार्गव श्रेष्ठ देव दानव पूजित: ।
  वृष्टिरोधप्रकर्त्रे च वृष्टिकर्त्रे नमो नम: ॥ ॥ १ ॥
- देवयानीपितस्तुभ्यं वेदवेदांगपारग: ।
  परेण तपसा शुद्ध: शंकरो लोकशंकर: ॥ ॥ २ ॥
- प्राप्तो विद्यां जीवनाख्यां तस्मै शुक्रात्मने नम: ।
  नमस्तस्मै भगवते भृगुपुत्राय वेधसे ॥ ॥ ३ ॥
- तारामण्डलमध्यस्थ स्वभासा भासिताम्बर: ।
  यस्योदये जगत्सर्वं मंगलार्हं भवेदिह ॥ ॥ ४ ॥
- अस्तं याते ह्यरिष्टं स्यात्तस्मै मंगलरूपिणे ।
  त्रिपुरावासिनो दैत्यान् शिवबाणप्रपीडितान् ॥ ॥ ५ ॥
- विद्यया जीवयच्छुक्रो नमस्ते भृगुनन्दन ।
  ययातिगुरवे तुभ्यं नमस्ते कविनन्दन ॥ ॥ ६ ॥
- बलिराज्यप्रदो जीवस्तस्मै जीवात्मने नम: ।
  भार्गवाय नमस्तुभ्यं पूर्वं गीर्वाणवन्दितम् ॥ ॥ ७ ॥
- जीवपुत्राय यो विद्यां प्रादात्तस्मै नमोनम: ।
  नम: शुक्राय काव्याय भृगुपुत्राय धीमहि ॥ ॥ ८ ॥
- नम: कारणरूपाय नमस्ते कारणात्मने ।
  स्तवराजमिदं पुण्यं भार्गवस्य महात्मन: ॥ ॥ ९ ॥
- य: पठेच्छुणुयाद्वापि लभते वाँछितफलम् ।
  पुत्रकामो लभेत्पुत्रान् श्रीकामो लभते श्रियम् ॥ ॥१०॥
- राज्यकामो लभेद्राज्यं स्त्रीकाम: स्त्रियमुत्तमाम् ।
  भृगुवारे प्रयत्नेन पठितव्यं सुसमाहितै: ॥ ॥११॥
- अन्यवारे तु होरायां पूजयेद्भृगुनन्दनम् ।
  रोगार्तो मुच्यते रोगात् भयार्तो मुच्यते भयात् ॥ ॥१२॥
- यद्यत्प्रार्थयते वस्तु तत्तत्प्राप्नोति सर्वदा ।
  प्रात: काले प्रकर्तव्या भृगुपूजा प्रयत्नत: ॥ ॥१३॥
- सर्वपापविनिर्मुक्त: प्राप्नुयाच्छिवसन्निधि: ॥ ॥१४॥

॥ इति श्री स्कन्दपुराणे शुक्र स्तोत्रम् सम्पूर्णम् ॥

# ॥ शुक्र स्तोत्रम् - २ ॥

- **विनियोग** अस्य श्री शुक्र स्तोत्र मन्त्रस्य । भारद्वाज ऋषि: । गायत्री छन्द: । शुक्रो देवता । श्री शुक्र पीडा परिहारार्थे पाठे विनियोगः ।

- **ऋष्यादिन्यास** शिरसि भारद्वाज ऋषये नम: । मुखे गायत्री छन्दसे नम: । हृदि शुक्र देवतायै नमः । सर्वांगे श्री शुक्र पीडा परिहारार्थे विनियोगाय नमः ।

- **शुक्रः काव्यः शुक्र रेताः शुक्लाम्बरधरः सुधीः।**
  **हिमाभः कुन्दधवलः शुभ्रांशुः शुक्लभूषणः ॥** ॥ १ ॥

- **नीतिज्ञो नीतिकृन्नीतिमार्गगामी ग्रहाधिपः।**
  **उशना वेदवेदांगपारगः कविरात्मवित् ॥** ॥ २ ॥

- **भार्गवः करुणासिन्धुः ज्ञानगम्यः सुतप्रदः।**
  **शुक्रस्यैतानि नामानि शुक्रं स्मृत्वा तु यः पठेत् ॥** ॥ ३ ॥

- **आयुर्धनं सुखं पुत्रान् लक्ष्मीं वसतिमुत्तमाम् ।**
  **विद्यां चैव स्वयं तस्मै शुक्रस्तुष्टो ददाति हि ॥** ॥ ४ ॥

॥ इति श्री स्कन्द पुराणे शुक्र स्तोत्रम् सम्पूर्णम् ॥

# ॥ शुक्र स्तोत्रम् - ३ ॥

- शृण्वन्तु मुनयः सर्वे शुक्रस्तोत्रमिदं शुभम् ।
  रहस्यं सर्वभूतानां शुक्रप्रीतिकरं शुभम् ॥ ॥ १ ॥

- येषां सङ्कीर्तनान्नित्यं सर्वान् कामानवाप्नुयात् ।
  तानि शुक्रस्य नामानि कथयामि शुभानि च ॥ ॥ २ ॥

- शुक्रः शुभग्रहः श्रीमान् वर्षकृद्वर्षविघ्नकृत् ।
  तेजोनिधिर्ज्ञानदाता योगी योगविदां वरः ॥ ॥ ३ ॥

- दैत्यसञ्जीवनो धीरो दैत्यनेतोशना कविः ।
  नीतिकर्ता ग्रहाधीशो विश्वात्मा लोकपूजितः ॥ ॥ ४ ॥

- शुक्लमाल्याम्बरधरः श्रीचन्दनसमप्रभः ।
  अक्षमालाधरः काव्यः तपोमूर्तिर्धनप्रदः ॥ ॥ ५ ॥

- चतुर्विंशतिनामानि अष्टोत्तरशतं यथा ।
  देवस्याग्रे विशेषेण पूजां कृत्वा विधानतः ॥ ॥ ६ ॥

- य इदं पठति स्तोत्रं भार्गवस्य महात्मनः ।
  विषमस्थोऽपि भगवान् तुष्टः स्यान्नात्र संशयः ॥ ॥ ७ ॥

- स्तोत्रं भृगोरिदमनन्तगुणप्रदं यो
  भक्त्या पठेच्च मनुजो नियतः शुचिः सन् ।
  प्राप्नोति नित्यमतुलां श्रियमीप्सितार्थान्
  राज्यं समस्तधनधान्ययुतां समृद्धिम् ॥ ॥ ८ ॥

॥ इति श्री शुक्र स्तोत्रम् सम्पूर्णम् ॥

# ॥ श्री शुक्र अष्टोत्तरशत नामावली ॥

1. ॐ शुक्राय नमः।
2. ॐ शुचये नमः।
3. ॐ शुभगुणाय नमः।
4. ॐ शुभदाय नमः।
5. ॐ शुभलक्षणाय नमः।
6. ॐ शोभनाक्षाय नमः।
7. ॐ शुभ्रवाहाय नमः।
8. ॐ शुद्धस्फटिकभास्वराय नमः।
9. ॐ दीनार्तिहरकाय नमः।
10. ॐ दैत्यगुरवे नमः।
11. ॐ देवाभिवन्दिताय नमः।
12. ॐ काव्यासक्ताय नमः।
13. ॐ कामपालाय नमः।
14. ॐ कवये नमः।
15. ॐ कल्याणदायकाय नमः।
16. ॐ भद्रमूर्तये नमः।
17. ॐ भद्रगुणाय नमः।
18. ॐ भार्गवाय नमः।
19. ॐ भक्तपालनाय नमः।
20. ॐ भोगदाय नमः।
21. ॐ भुवनाध्यक्षाय नमः।
22. ॐ भुक्तिमुक्तिफलप्रदाय नमः।
23. ॐ चारुशीलाय नमः।
24. ॐ चारुरूपाय नमः।
25. ॐ चारुचन्द्रनिभाननाय नमः।
26. ॐ निधये नमः।
27. ॐ निखिलशास्त्रज्ञाय नमः।
28. ॐ नीतिविद्याधुरन्धराय नमः।
29. ॐ सर्वलक्षणसम्पन्नाय नमः।
30. ॐ सर्वापद्गुणवर्जिताय नमः।
31. ॐ समानाधिकनिर्मुक्ताय नमः।
32. ॐ सकलागमपारगाय नमः।
33. ॐ भृगवे नमः।
34. ॐ भोगकराय नमः।
35. ॐ भूमिसुरपालनतत्पराय नमः।
36. ॐ मनस्विने नमः।
37. ॐ मानदाय नमः।
38. ॐ मान्याय नमः।
39. ॐ मायातीताय नमः।
40. ॐ महायशसे नमः।
41. ॐ बलिप्रसन्नाय नमः।
42. ॐ अभयदाय नमः।
43. ॐ बलिने नमः।
44. ॐ सत्यपराक्रमाय नमः।
45. ॐ भवपाशपरित्यागाय नमः।
46. ॐ बलिबन्धविमोचकाय नमः।
47. ॐ घनाशयाय नमः।
48. ॐ घनाध्यक्षाय नमः।
49. ॐ कम्बुग्रीवाय नमः।
50. ॐ कलाधराय नमः।
51. ॐ कारुण्यरससम्पूर्णाय नमः।
52. ॐ कल्याणगुणवर्धनाय नमः।
53. ॐ श्वेताम्बराय नमः।
54. ॐ श्वेतवपुषे नमः।
55. ॐ चतुर्भुजसमन्विताय नमः।
56. ॐ अक्षमालाधराय नमः।
57. ॐ अचिन्त्याय नमः।
58. ॐ अक्षीणगुणभासुराय नमः।
59. ॐ नक्षत्रगणसञ्चाराय नमः।
60. ॐ नयदाय नमः।
61. ॐ नीतिमार्गदाय नमः।
62. ॐ वर्षप्रदाय नमः।
63. ॐ हृषीकेशाय नमः।
64. ॐ क्लेशनाशकराय नमः।
65. ॐ कवये नमः।
66. ॐ चिन्तितार्थप्रदाय नमः।
67. ॐ शान्तमतये नमः।
68. ॐ चित्तसमाधिकृते नमः।
69. ॐ आधिव्याधिहराय नमः।
70. ॐ भूरिविक्रमाय नमः।
71. ॐ पुण्यदायकाय नमः।
72. ॐ पुराणपुरुषाय नमः।
73. ॐ पूज्याय नमः।
74. ॐ पुरुहूतादिसन्नुताय नमः।
75. ॐ अजेयाय नमः।
76. ॐ विजितारातये नमः।
77. ॐ विविधाभरणोज्ज्वलाय नमः।
78. ॐ कुन्दपुष्पप्रतीकाशाय नमः।
79. ॐ मन्दहासाय नमः।
80. ॐ महामतये नमः।
81. ॐ मुक्ताफलसमानाभाय नमः।
82. ॐ मुक्तिदाय नमः।
83. ॐ मुनिसन्नुताय नमः।
84. ॐ रत्नसिंहासनारूढाय नमः।
85. ॐ रथस्थाय नमः।
86. ॐ रजतप्रभाय नमः।
87. ॐ सूर्यप्राग्देशसञ्चाराय नमः।
88. ॐ सुरशत्रुसुहृदे नमः।
89. ॐ कवये नमः।
90. ॐ तुलावृषभराशीशाय नमः।
91. ॐ दुर्धराय नमः।
92. ॐ धर्मपालकाय नमः।
93. ॐ भाग्यदाय नमः।
94. ॐ भव्यचारित्राय नमः।
95. ॐ भवपाशविमोचकाय नमः।
96. ॐ गौडदेशेश्वराय नमः।
97. ॐ गोप्त्रे नमः।
98. ॐ गुणिने नमः।
99. ॐ गुणविभूषणाय नमः।
100. ॐ ज्येष्ठानक्षत्रसम्भूताय नमः।
101. ॐ ज्येष्ठाय नमः।
102. ॐ श्रेष्ठाय नमः।
103. ॐ शुचिस्मिताय नमः।
104. ॐ अपवर्गप्रदाय नमः।
105. ॐ अनन्ताय नमः।
106. ॐ सन्तानफलदायकाय नमः।
107. ॐ सर्वैश्वर्यप्रदाय नमः।
108. ॐ सर्वगीर्वाणगणसन्नुताय नमः।

॥ इति श्री शुक्र अष्टोत्तरशत नामावली सम्पूर्णम ॥